रात्रौ रज्जोक्षत्रियाणी नित्यसेवापरायणा ॥
प्राप्ता पक्वान्नसामग्रीमादायाचार्यसंमुखम् ॥५१०॥
तां दृष्ट्वा श्रीमदाचार्याः पृष्ठं कृत्वाऽत्मनः स्थिताः
इत्यद्भुतं च सा प्रेक्ष्य विज्ञप्तिं कृतवत्यभूत् ॥५११॥
महाराजा. कोऽपराधो ममेति विनिरूप्यताम् ॥
तदोक्तं श्रीमदाचार्यैः शृणु मे प्रियकारिणि ॥५१२॥
पितृलक्ष्मणभट्टस्य क्षयश्राद्धेऽद्य भोजिता·
विप्रास्तदर्थं हि मया घृतं त्वद्गृहतोऽर्थितम् ॥५१३॥
तत्त्वया न कथं दत्तमिति क्षिप्ताऽथ साऽवदत् ॥
नाऽस्मि लक्ष्मणभट्टस्य दासिका भवतामहम् ॥५१४॥
दद्यां यच्छ्राद्धभुग्विप्रभोजनार्थं घृतं प्रभो ॥
भवतां किं गृहे तन्न हरेश्चेद्· समो विधिः ॥५१५॥
इत्थं तद्वचनं श्रुत्वाऽऽचार्यास्तूष्णीं तदाऽभवन् ॥
ततस्तया पुरोन्यस्तां सामग्रीं नित्यवन् मुदा ॥५१६॥
वीक्ष्याचार्यैर्वचः प्रोक्तमद्य श्राद्धदिने मया ॥
भोक्तव्यं न पुनर्भद्रे द्विर्न भोज्यमिति स्मृतेः ॥५१७॥
तदाकर्ण्य तया प्रोक्तमाचार्याः सत्यमुच्यते ॥
वर्ज्यं पुनर्भोजनं तु स्वगेहजमिति स्मृतेः ॥५१८॥
व्यवस्थितिं विचार्याऽर्या भक्ष्यं ग्राह्यमिदं हि वः ॥
इत्याकर्ण्य ज्ञातहार्दैराचार्यै स्तत्सदाग्रहात् ॥५१९॥
भुक्तं प्रभोः प्रसादार्थं पक्वान्न घृतपाचितम् ॥
एतादृक् श्रीमदाचार्यकृपापात्रं बभूव सा ॥
रज्जोनाम्नी क्षत्रियाणी कृष्णसेवा परायणा ॥५२०॥

इति श्रीमद्वैष्णवकथासुमालायामष्टमवार्तामणिः